सारिवादिः पिपासाघ्नो रक्तपित्तहरो गणः ॥
पित्तज्वरप्रशमनो विशेषाद्दाहनाशनः ॥ ४० ॥

शा(सा)रिवादौ—शा(सा)रिवा अनन्ता, द्वितीया उत्पलशा(सा)रिवा श्यामलतेत्याहुः, कुचन्दनं चन्दनभेदः, काश्मर्यं गाम्भारीफलम् ॥ ३९ ॥ ४० ॥

अञ्जनरसाञ्जननागपुष्पप्रियङ्गुनीलोत्पलनलदनलिनकेशराणि मधुकं चेति ॥ ४१ ॥

अञ्जनादिर्गणो ह्येष रक्तपित्तनिबर्हणः ॥
विषोपशमनो दाहं निहन्त्याभ्यन्तरं भृशम् ॥ ४२ ॥

अञ्जनादौ—अञ्जनं सौवीराञ्जनं; नलिनं केशरं, किंवा केशरं नागकेशरम् ॥४१॥४२॥

परूषकद्राक्षाकट्फलदाडिमराजादनकतकफलशाकफलानि त्रिफला चेति ॥ ४३ ॥

परूषकादिरित्येष गणोऽनिलविनाशनः ॥
मूत्रदोषहरो हृद्यः पिपासाघ्नो रुचिप्रदः ॥ ४४ ॥

परूषकादौ—सर्वेषां फलं, तेन कट्फला गाम्भारी तस्याः फलं; राजादनं क्षीरिका; कतकफलं तोयप्रसादनं स्वनामप्रसिद्धम् ॥ ४३ ॥ ४४ ॥

प्रियङ्गुसमङ्गाधातकीपुन्नागनागपुष्पचन्दनकुचन्दनमोचरसरसाञ्जनकुम्भीकस्रोतोजपद्मकेसरयोजनवल्ल्यो दीर्घमूला चेति ॥ ४५ ॥

प्रियङ्ग्वादौ—समङ्गा वराहक्रान्ता, धातकी धातकीपुष्पं, पुन्नागः स्वनामख्यातः, नागपुष्पं नागकेसरं, मोचरसः शाल्मलीवेष्टकः, कुम्भीकः कुम्भाह्वलता, योजनवल्ली मञ्जिष्ठा, दीर्घमूला शालपर्णी ॥ ४५ ॥

अम्बष्ठाधातकीकुसुमसमङ्गाकट्वङ्गमधुकबिल्वपेशिकासावररोध्रपलाशनन्दीवृक्षाः पद्मकेशराणि चेति ॥ ४६ ॥

गणौ प्रियङ्ग्वम्बष्ठादी पक्वातीसारनाशनौ ॥
सन्धानीयौ हितौ पित्ते व्रणानां चापि रोपणौ ॥ ४७ ॥

अम्बष्ठादौ—अम्बष्ठा अविद्धपर्णी; कट्वङ्गः स्योनाकः; लोध्र इह ह्रस्वलोध्रः, तस्यैव ग्राहित्वात्; पलाशः किंशुकवृक्षः; नन्दीवृक्षः गन्धमुण्डः ॥ ४६–४७ ॥

न्यग्रोधोदुम्बराश्वत्थप्लक्षमधुककपीतनककुभाम्रकोशाम्रचोरकपत्रजम्बूद्वयप्रियालमधूकरोहिणीवञ्जुलकदम्बबदरीतिन्दुकीसल्लकीरोध्रसावररोध्रभल्लातकपलाशा नन्दीवृक्षश्चेति ॥ ४८ ॥

न्यग्रोधादिर्गणो व्रण्यः संग्राही भग्नसाधकः ॥
रक्तपित्तहरो दाहमेदोघ्नो योनिदोषहृत् ॥ ४९ ॥

न्यग्रोधादौ—प्लक्ष इह पर्कटिरिति ख्यातः, ककुभोऽर्जुनः, जम्बूद्वयं स्वल्पजम्बूस्तथा बृहत्फला च राजजम्बूः, प्रियालः स्वनामख्यातः, वञ्जुलो वेतसः, तिन्दुकः 'केन्दू' इति ख्यातः, कदम्बो बहुफलः, नन्दीमुखो गन्धमुण्डः ॥ ४८–४९ ॥

**गुडूचीनिम्बकुस्तुम्बुरुचन्दनानि पद्मकं चेति ॥ ५० ॥**

**एष सर्वज्वरान् हन्ति गुडूच्यादिस्तु दीपनः ॥**
**हृल्लासारोचकवमीपिपासादाहनाशनः ॥ ५१ ॥**

गुडूच्यादौ पद्मकं पद्मकाष्ठम् ॥ ५० ॥ ५१ ॥

**उत्पलरक्तोत्पलकुमुदसौगन्धिककुवलयपुण्डरीकाणि मधुकं चेति ॥ ५२ ॥**

**उत्पलादिरयं दाहपित्तरक्तविनाशनः ॥**
**पिपासाविषहृद्रोगच्छर्दिमूर्च्छाहरो गणः ॥ ५३ ॥**

उत्पलादौ—कुमुदं 'कह्लार' इति ख्यातं, सौगन्धिकं स्वल्पसुगन्धिकेति ख्यातं, कुवलयमीषन्नीलधवलमुत्पलं, पुण्डरीकं श्वेतपद्मम् ॥ ५२ ॥ ५३ ॥

**मुस्ताहरिद्रादारुहरिद्राहरीतक्यामलकबिभीतककुष्ठहैमवतीवचापाठाकटुरोहिणीशार्ङ्गेष्टातिविषाद्राविडीभल्लातकानि चित्रकश्चेति ॥ ५४ ॥**

**एष मुस्तादिको नाम्ना गणः श्लेष्मनिषूदनः ॥**
**योनिदोषहरः स्तन्यशोधनः पाचनस्तथा ॥ ५५ ॥**

मुस्तादौ शार्ङ्गेष्टा काकजङ्घा काइञ्चीति ख्याता, द्राविडी एला ॥ ५४ ॥ ५५ ॥

**हरीतक्यामलकबिभीतकानीति त्रिफला ॥ ५६ ॥**

**त्रिफला कफपित्तघ्नी मेहकुष्ठविनाशनी ॥**
**चक्षुष्या दीपनी चैव विषमज्वरनाशनी ॥ ५७ ॥**

त्रिफला प्रसिद्धा ॥ ५६ ॥ ५७ ॥

**पिप्पलीमरिचशृङ्गवेराणीति त्रिकटुकम् ॥ ५८ ॥**

**त्र्यूषणं कफमेदोघ्नं मेहकुष्ठत्वगामयान् ॥**
**निहन्याद्दीपनं गुल्मपीनसाग्र्यल्पतामपि ॥ ५९ ॥**

त्रिकटु प्रसिद्धम् ॥ ५८ ॥ ५९ ॥

**आमलकीहरीतकीपिप्पल्यश्चित्रकश्चेति ॥ ६० ॥**

**आमलक्यादिरित्येष गणः सर्वज्वरापहः ।**
**चक्षुष्यो दीपनो वृष्यः कफारोचकनाशनः ॥ ६१ ॥**

आमलक्यादिः प्रसिद्धः । केचिदिमौ गणौ न पठन्ति ॥ ६० ॥ ६१ ॥

**त्रपुसीसताम्ररजतसुवर्णकृष्णलोहानि लोहमलश्चेति ॥ ६२ ॥**

**गणस्त्रप्वादिरित्येष गरक्रिमिहरः परः ॥**
**पिपासाविषहृद्रोगपाण्डुमेहहरस्तथा ॥ ६३ ॥**

त्रप्वादौ—त्रपु वङ्गं, कृष्णलोहं लोहमेव, लोहमलं प्रसिद्धम् ॥ ६२ ॥ ६३ ॥

**लाक्षारेवतकुटजाश्वमारकट्फलहरिद्राद्वयनिम्बसप्तच्छदमालत्यस्त्रायमाणा चेति ॥ ६४ ॥**

**कषायतिक्तमधुरः कफपित्तार्तिनाशनः ॥**
**कुष्ठक्रिमिहरश्चैव दुष्टव्रणविशोधनः ॥ ६५ ॥**

लाक्षादौ आरेवतः सुवर्णहलिः, अश्वमारः करवीरकः, सप्तच्छदः सप्तपर्णः, मालती जातिः, त्रायमाणा यदि पठ्यते सा स्वनामप्रसिद्धैव ॥ ६४ ॥ ६५ ॥

**पञ्च पञ्चमूलान्यत ऊर्ध्वं वक्ष्यामः ।—**
**तत्र एरण्डबृहतीद्वयपृथक्पर्ण्यो विदारिगन्धा चेति कनीयः ॥ ६६ ॥**

**कषायतिक्तमधुरं कनीयः पञ्चमूलकम् ॥**
**वातघ्नं पित्तशमनं बृंहणं बलवर्धनम् ॥ ६७ ॥**

पञ्चसु मूलेषु मूलानीति वचनान्मूलमेव परं ग्राह्यम् । द्वे बृहत्याविति कण्टकारिकया सह । चरके गोक्षुरकं च एरण्डस्थाने पठ्यते न सुश्रुतप्रयोगेषु; एवं पञ्चमूलीप्रयोगे एरण्डो गृहीतव्यः । गुणतो ज्येष्ठतमो वर्गप्रथमपाठात् ॥ ६६ ॥ ६७ ॥

**बिल्वाग्निमन्थटिण्टुकपाटलाः काश्मरी चेति महत् ॥ ६८ ॥**

**सतिक्तं कफवातघ्नं पाके लघ्वग्निदीपनम् ॥**
**मधुरानुरसं चैव पञ्चमूलं महत् स्मृतम् ॥ ६९ ॥**

**अनयोर्दशमूलमुच्यते ॥ ७० ॥**

**गणः श्वासहरो ह्येष कफपित्तानिलापहः ॥**
**आमस्य पाचनश्चैव सर्वज्वरविनाशनः ॥ ७१ ॥**

बृहत्पञ्चमूले टुण्टुकः स्योनाकः ॥ ६८–७१ ॥

**विदारीसारिवारजनीगुडूच्योऽजशृङ्गी चेति वल्लीसंज्ञः ॥ ७२ ॥**
**करमर्दीत्रिकण्टकसैरीयकशतावरीगृध्रनख्य इति कण्टकसंज्ञः ॥ ७३ ॥**

**रक्तपित्तहरौ ह्येतौ शोफत्रयविनाशनौ ॥**
**सर्वमेहहरौ चैव शुक्रदोषविनाशनौ ॥ ७४ ॥**

वल्लीपञ्चमूले विदारी विदारीकन्दः, सारिवा अनन्तमूलं, रजनी हरिद्रा, अजशृङ्गी छागलकर्णीति ख्याता छागसदृशगन्धा। कण्टकसंज्ञे करमर्दी स्वल्पमधुरफला, त्रिकण्टो गोक्षुरकः, सैरीयो झिण्टिका, गृध्रनखी 'कालाकेड' इति ख्याता ॥ ७२-७४ ॥

कुशकाशनलदर्भकाण्डेक्षुका इति तृणसंज्ञकः ॥ ७५ ॥
मूत्रदोषविकारं च रक्तपित्तं तथैव च ॥
अन्त्यः प्रयुक्तः क्षीरेण शीघ्रमेव विनाशयेत् ॥ ७६ ॥

तृणसंज्ञे दर्भः 'उलुया' इति ख्यातं तृणं, काण्डेक्षुर्महती खङ्गी, 'काण्ड' इति पाठपक्षे शरः ॥ ७५ ॥ ७६ ॥

एषां वातहरावाद्यावन्त्यः पित्तविनाशनः ॥
पञ्चकौ श्लेष्मशमनावितरौ परिकीर्तितौ ॥ ७७ ॥
त्रिवृतादिकमन्यत्रोपदेक्ष्यामः ॥ ७८ ॥

पञ्चमूलानां पुनर्गुणविशेषमाह—एषामित्यादि ॥ ७७ ॥ ७८ ॥

समासेन गणा ह्येते प्रोक्तास्तेषां तु विस्तरम् ॥
चिकित्सितेषु वक्ष्यामि,

अयं कृत्स्नोऽपि गणनिर्देशः संक्षेपतः, विस्तरस्तस्य भविष्यतीति दर्शयन्नाह—समासेनेत्यादि। विस्तरमिति विस्तरविषयतां; चिकित्सिते हि एत एव गणास्तस्मिन् तस्मिन्नध्याये वक्तव्याः। किंवा विस्तरमिति गणान्तराणि; तानि च प्रयोगा एव तत्तद्व्याधिशमनाः। ते हि प्रयोगाः प्राय एतदध्यायोक्तौषधसमूहविशेषा एव ॥—

ज्ञात्वा दोषबलाबलम् ॥ ७९ ॥
एभिर्लेपान् कषायांश्च तैलं सर्पींषि पानकान् ॥
प्रविभज्य यथान्यायं कुर्वीत मतिमान् भिषक् ॥ ८० ॥

उक्तगणानां सविशेषां कल्पनामाह—ज्ञात्वा दोषबलाबलमित्यादि। आदिशब्दोऽत्र लुप्तनिर्दिष्टः; तेनातुरादीनां सर्वेषामेव परीक्ष्याणां ग्रहणं; किंवा दोषविशेषणतयैवातुरादिपरीक्षाऽप्यवबोद्धव्या। तत्राविष्कृताः कल्पनाः साक्षादुक्ताः; अनुक्ताश्चकारसमुच्चिताः यूषपानकचूर्णादयः ॥ ७९ ॥ ८० ॥

धूमवर्षानिलक्लेदैः सर्वर्तुष्वनभिद्रुते ॥
ग्राहयित्वा गृहे न्यस्येद्विधिनौषधसंग्रहम् ॥ ८१ ॥
समीक्ष्य दोषभेदांश्च भिन्नान् मिश्रान् प्रयोजयेत् ॥
पृथङ्मिश्रान् समस्तान् वा गणं वा व्यस्तसंहतम् ॥ ८२ ॥

इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने द्रव्यसंग्रहणीयो नामाष्टत्रिंशोऽध्यायः ॥ ३८ ॥

संप्रति उक्तगणानां कार्यभेदमवेक्ष्य पृथक्प्रयोगं तथा गणद्वयत्रयादिमेलकप्रयोगं च दर्शयन्नाह—समीक्ष्येत्यादि । दोषभेदेन दोषाभिन्नो व्याधिरपि ग्राह्यः । भिन्नानिति भिन्नत्वेनोक्तान् । पृथगिति प्रत्येकम् । मिश्रानिति गणान्तरमिश्रान्, समस्तानिति द्वित्र्यादीन्; यदुक्तमन्यत्र—"वर्गमपि वर्गेण उपसंसृजेदेकमेकेनानेकेन वा" ( च. वि. अ. ८ ) इति । गणस्य स्तोकद्रव्यप्रयोगमाह—गणं वा व्यस्तसंहतमिति । व्यस्तमिति त्रिचतुरादिद्रव्यसहितम् । संहतमिति मिलितम् । अयं चार्थो मिश्रकोक्तोऽपि पुनः प्रकरणादभिधीयत इति न पौनरुक्तम् ॥ ८१ ॥ ८२ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने द्रव्यसंग्रहणीयो नामाष्टत्रिंशत्तमोऽध्यायः ॥

---

## एकोनचत्वारिंशत्तमोऽध्यायः ।

**अथातः संशोधनसंशमनीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

द्रव्यसंग्रहणीयानन्तरं संशोधनसंशमनद्रव्यगणसामान्यात् संशोधनसंशमनीयोऽभिधीयते । संशोधनमिह वमनविरेचनशिरोविरेचनानि विवक्षितानि, बस्तिस्तु बहुप्रपञ्चत्वेन पञ्चकर्मणि न वक्तव्यः; तेन तस्य संशोधनस्यापि तत्रैवाभिधानं भविष्यतीति नेह तत्कृतं; किंवा य एव वातपित्तकफशमनवर्गास्त एव वातादिहननबस्तियोजनीयाः, एवं बस्त्युपयुक्तौषधगणाभिधानमपि भूतमेव; न च वमनविरेचनशिरोविरेचनशक्तियुक्तमदनफलादिवद् बस्त्युपयुक्तानि शक्तिविशेषवन्ति स्फुटानि द्रव्याणि सन्ति, तेन पृथग्गणेनेह साक्षान्नोपयुक्तानि, वातहरादिगणात्तु कल्प्यानि ॥ १ ॥ २ ॥

**मदनकुटजजीमूतकेक्ष्वाकुधामार्गवकृतवेधनसर्षपविडङ्गपिप्पलीकरञ्जप्रपुन्नाडकोविदारकर्बुदारारिष्टाश्वगन्धाविदुलबन्धुजीवकश्वेताशणपुष्पीबिम्बीवचामृगेर्वारवश्चित्रा चेत्यूर्ध्वभागहराणि । तत्र, कोविदारपूर्वाणां फलानि, कोविदारादीनां मूलानि ॥ ३ ॥**

तत्रोत्सर्गतो वमनशक्तिपूर्वकत्वाद्विरेचनस्य वमनद्रव्यगणमाह—मदनेत्यादि । वमनं हि अवान्तस्य सम्यग्विरिक्तस्यापि अधः स्रस्तः श्लेष्मा ग्रहणीमाच्छादयतीति । जीमूतको घोषकः देवदालीति व्याकृतः; इक्ष्वाकुः कटुकालाबूः; धामार्गवः पीतघोषः; कृतवेधनस्तद्भेद एवोक्तः; कोविदारो युग्मपत्रः, स द्विविधो लोहितसितपुष्पभेदात्; विज्जलो वेतसः; श्वेता श्वेतवचा; शणपुष्पी घण्टारवा; बिम्बी ओष्ठोपमफला; मृगेर्वारुर्गोरक्षकर्कटी; चित्रा चित्रफला गोडुम्बा । कोविदारपूर्वाणामिति एडगजान्ताम् । अत्रापि कृतवेधनान्तानां वमनाध्याये प्राधान्येन प्रयोगाभिधानात् प्राधान्यं, सर्षपादीनां तु वमनद्रव्योपसर्जनत्वम् ॥ ३ ॥

**त्रिवृच्छ्यामादन्तीद्रवन्तीसप्तलाशङ्खिनीविषाणिकागवाक्षीच्छगलान्त्रीस्नुक्सुवर्णक्षीरीचित्रककिणिहीकुशकाशतिल्वककम्पिल्लकरम्यकपाटलापूगहरीतक्यामलकविभीतकनीलिनीचतुरङ्गुलैरण्डपूतीकमहावृक्षसप्तच्छदार्का ज्योतिष्मती चेत्यधोभागहराणि । तत्र तिल्वकपूर्वाणां मूलानि, तिल्वकादीनां पाटलान्तानां त्वचः, कम्पिल्लकफलरजः, पूगादीनामेरण्डान्तानां फलानि, पूतीकारग्वधयोः पत्राणि, शेषाणां क्षीराणीति ॥ ४ ॥**

विरेचनान्याह—त्रिवृदित्यादि । त्रिवृत् अरुणमूला त्रिवृत्; दन्त्येव चीरितपत्रा द्रवन्ती; विषाणिका आवर्तनी; छगलान्त्री वृद्धदारकः; नीलिनी नीलबुध्रा; स्नुही सेहुण्डः; किणिही कटभी; शानुक्तम् (?) औत्तरापथिकं फलं; तिल्वको लोध्रः; कम्पिल्लको गुण्डारोचनिका; रम्यकं पटोलमूलं; पञ्चाङ्गुलः चित्रैरण्डः; महावृक्षः स्नुहीभेदः । ज्योतिष्मती स्वनामख्याता । तिल्वकपूर्वाणां किणिह्यन्तानाम् । मूलवर्गे स्नुहीपाठान्मूलमपि स्नुह्या गृह्यते, क्षीरवर्गे पाठाच्च क्षीरमपि । कम्पिल्लकस्तु त्वग्वर्गे पाठात् त्वचा ग्राह्य एव, परं वैद्यव्यवहाराच्चरकवचनाच्च तस्य फलरजो गृह्यते; उक्तं हि **चरके**—"कम्पिल्लकारग्वधयोः फलं यत् कुटजस्य च" (च. सू. अ. १) इति । एवमारग्वधस्य पत्रं विरेचनं चरकवचनात्, फलं च । पूतीकस्य तु पत्रमिह विरेचनमुक्तम्, **चरके तु**—"पूतीकः कृष्णगन्धा च" (च. सू. अ. १) इत्यादिना त्वक् प्रधानमुक्ता; तेन साऽपि प्रयोगेषु ग्रहीतव्या ॥ ४ ॥

**कोशातकी सप्तला शङ्खिनी देवदाली कारवेल्लिका चेत्युभयतोभागहराणि । एषां स्वरसा इति ॥ ५ ॥**

कोषातक्यादीनां स्वरसा उभयतोभागहराः । फलं तु कोषातकीदेवदाल्योर्वामनमुक्तमिति शेषः । देवदाली घोषाभेदः ॥ ५ ॥

**पिप्पलीविडङ्गापामार्गशिग्रुसिद्धार्थकशिरीषमरिचकरवीरबिम्बीगिरिकर्णिकाकिणिहीवचाज्योतिष्मतीकरञ्जार्कालर्कलशुनातिविषाशृङ्गवेरतालीशतमालसुरसार्जकेङ्गुदीमेषशृङ्गीमातुलुङ्गीमुरङ्गीपीलुजातीशालतालमधूकलाक्षाहिङ्गुलवणमद्यगोशकृद्रसमूत्राणीति शिरोविरेचनानि । तत्र करवीरपूर्वाणां फलानि, करवीरादीनामर्कान्तानां मूलानि, तालीशपूर्वाणां कन्दाः, तालीशादीनामर्जकान्तानां पत्राणि, इङ्गुदीमेषशृङ्ग्योस्त्वचः, मातुलुङ्गीमुरङ्गीपीलुजातीनां पुष्पाणि, शालतालमधूकानां साराः, हिङ्गुलाक्षे निर्यासौ, लवणानि पार्थिवविशेषाः; मद्यान्यासुतसंयोगाः, शकृद्रसमूत्रे मलाविति ॥ ६ ॥**

पिप्पलीत्यादिना शिरोविरेचनद्रव्यमुच्यते । सिद्धार्थकः श्वेतसर्षपः; गिरिकर्णिका

अपराजिता; किणिही कटभी; अर्जकः श्वेतपर्णासः; इङ्गुदी पुत्रञ्जीवकः; मेषशृङ्गी 'मेढशिंगी' इति ख्यातः पुत्रजीवसदृशपत्रो वृक्षः; मातुलुङ्गी प्रसिद्धा; मुरङ्गी शोभाञ्जनकम्। तत्रेत्यादिना शिरोविरेचनद्रव्यविभागमाह । हिङ्ग्वादीनां मूत्रान्तानां स्वरूपकथनेन सर्वात्मप्रयोगं दर्शयति ॥ ६ ॥

**संशमनान्यत ऊर्ध्वं वक्ष्यामः-तत्र भद्रदारुकुष्ठहरिद्रावरुणमेषशृङ्गीबलातिबलार्तगलकच्छुराशल्लकीकुबेराक्षीवीरतरुसहचराग्निमन्थवत्सादन्येरण्डाश्मभेदकालर्कार्कशतावरीपुनर्नवावसुकवशिरकाञ्चनकभार्गीकार्पासीवृश्चिकालीपत्तूरबदरयवकोलकुलत्थप्रभृतीनि विदारिगन्धादिश्च द्वे चाद्ये पञ्चमूल्यौ समासेन वातसंशमनो वर्गः ॥ ७ ॥**

संशमनानि गणीकृत्याह—संशमनान्यत इत्यादि । संशमनं नाम यद्दोषं दोषग्रहणगृहीतं च व्याधिं संशोधनं विना क्षपयति समं च नोदीरयत्यपि । वचनं हि—"न शोधयति यद्दोषान् समान्नोदीरयत्यपि । समीकरोति यः क्रुद्धान् तत् संशमनमुच्यते"—इति । बलातिबले शुक्लपीतपुष्पबलाद्वयम्; आर्तगलः ककुभः, केचित् कण्टकीफलमाहुः, एतत्स्थाने तगरमन्ये पठन्ति; कुबेराक्षी पेटिका, काष्ठपाटलेत्यन्ये; वीरतरुः शरो वा बृहद्धातो वा; वसुको वसुहट्टकः; वशिरः सूर्यावर्तभेदः; काञ्चनको धत्तूरः । प्रभृतिग्रहणादनुक्तमपि मधुरतिक्तादि गृह्यते । समासेनेति वचनादन्नपानादौ वातहरणत्वेन यदप्यन्यद्वक्तव्यं भूमिजलादि तत् सर्वं गृह्यते, एवमन्यत्रापि समासेनेति शब्दार्थो नेयः ॥ ७ ॥

**चन्दनकुचन्दनह्रीबेरोशीरमञ्जिष्ठापयस्याविदारीशतावरीगुन्द्राशैवलकह्लारकुमुदोत्पलकन्द(द)लीदूर्वामूर्वाप्रभृतीनि काकोल्यादिः सारिवादिरञ्जनादिरुत्पलादिर्न्यग्रोधादिस्तृणपञ्चमूलमिति समासेन पित्तसंशमनो वर्गः ॥ ८ ॥**

**कालीयकागुरुतिलपर्णीकुष्ठहरिद्राशीतशिवशतपुष्पासरलारास्नाप्रकीर्योदकीर्येङ्गुदीसुमनाकाकादनीलाङ्गलकीहस्तिकर्णमुञ्जातकलामज्जकप्रभृतीनि वल्लीकण्टकपञ्चमूल्यौ पिप्पल्यादिर्बृहत्यादिर्मुष्ककादिर्वचादिः सुरसादिरारग्वधादिरिति समासेन श्लेष्मसंशमनो वर्गः ॥ ९ ॥**

श्लेष्मशमनवर्गमाह—कालीयकेत्यादि । कालीयकं वर्णप्रसादनं 'कालियाकाठ' इति ख्यातं; तिलपर्णी 'तूल' इति लोके प्रसिद्धं; शीतशिवः कर्पूरं, 'शमी' इत्यन्ये; प्रकीर्यः कण्टककरञ्जः; उदकीर्या करञ्जः; इङ्गुदी पुत्रञ्जीवकः; काकादनी काकजङ्घा, 'कलावकडक' इत्यन्ये; हस्तिकर्णो हस्तिपलाशः; मुञ्जातकः उत्तरापथे प्रसिद्धः, अयं च तन्त्रान्तरे वातपित्तहरः पठितस्तेन नात्र पठनीय एव अवयवभेदो वा । प्रभृतिग्रहणादनुक्तकटुतिक्तादिद्रव्यग्रहणम् । अत्र च पिप्पल्यादिगणपठितानामपि पुनः पठनं विशेषेण श्लेष्महरत्वादिप्रतिपादनार्थम् ॥ ८ ॥

**तत्र सर्वाण्येवौषधानि व्याध्यग्निपुरुषबलान्यभिसमीक्ष्य विदध्यात् । तत्र, व्याधिबलादधिकमौषधमुपयुक्तं तमुपशम्य व्याधिमन्यमावहति; अग्निबलादधिकमजीर्णं विष्टभ्य वा पच्यते; पुरुषबलादधिकं ग्लानिमूर्च्छामदानावहति संशमनम्; एवं संशोधनमतिपातयति; हीनमेभ्यो दत्तमकिंचित्करं भवति । तस्मात् सममेव विदध्यात् ॥ १० ॥**

इदानीमुक्तानां संशोधनसंशमनानां प्रयोगो व्याध्यादिबलापेक्षया मात्रया कर्तव्य इति दर्शयन्नाह—अत्र सर्वाणीत्यादि । सर्वाणीति संशोधनानि संशमनानि च । व्याधिशब्देनात्र दोषस्यापि ग्रहणाद्दोषबलमप्यवेक्ष्यम् । तत्र व्याधेर्दोषस्य बलवत्त्वं हेतुबाहुल्याल्लिङ्गबाहुल्याच्च, दुर्बलत्वं तद्विपर्ययात्; अग्नेर्बलवत्त्वं गुरुतृष्ण्यादिजरणशक्त्या, उचिताहारपाकाशक्त्या दुर्बलत्वम्; देहबलं च व्यायामेन, विपर्ययेण दौर्बल्यम्; उपचयापचयाभ्यां च देहबलत्वं ज्ञेयम्; पुरुषग्रहणेन मनसो बलत्वाबलत्वेऽपि ग्राह्ये । यथोक्तबलान्यनपेक्ष्य भेषजप्रयोगेषु क्रमेण दोषानाह—व्याधिबलादधिकमित्यादि । अन्यव्याधिमिति अतियोगजन्यं व्याधिं वा दोषं वा । विष्टभ्येति चिरकालं स्थिरीभूय शूलादि कृत्वेत्यर्थः । ग्लानिमूर्च्छामदाः शरीरमनोबलभ्रंशकृता ज्ञेयाः । संशोधनमेवमिति संशोधनमपि बलाद्यनपेक्षं यथोक्तदोषं भवति । अतिपातयतीति अतिदोषपातनं करोति, किंवा अतिपातयतीति संशमनापेक्षया संशोधनमतियुक्तमतिव्यापत्तिकरं भवत्येव । व्याध्यपेक्षया हि प्राधान्येन भेषजमात्रा, सा तु सम्यक्पाकार्थमग्निबलं पुरुषबलं चापेक्षते, ([1] उक्तदोषप्रमाणानुरूपा हि भेषजमात्रा, सा तु सम्यक्पाकार्थमग्निबलं पुरुषबलं चापेक्षते; ) उक्तं च "दोषप्रमाणानुरूपो हि भेषजप्रमाणविकल्पो बलप्रमाणापेक्षो भवति" (च. वि. अ. ८); ततश्च हीनमेभ्यो दत्तमिति बहुवचनमनुपपन्नम् । नैवं, बहुवचनं तावद्बलवति व्याधौ तथा बलवतोर्व्याधिपुरुषयोस्तथा बलवत्सु व्याधिपुरुषाग्निमित्यादि विकल्पबहुलादप्युपपन्नं; किंतु व्याधिबलमात्रसमं भेषजं बलवत्यग्नौ पुरुषे वा अल्पमात्रतया उपयुक्तं सत् तयोर्बलेनाभिभूयाल्पशक्तिकं क्रियते, तेन व्याधिमपि न तथा शमयति, तेन हीनमेभ्य इति बहुवचनमुपपन्नम् । सममेवेति व्याध्यादिबलसममेव ॥१०॥

**भवन्ति चात्र—**

**रोगे शोधनसाध्ये तु यो भवेद्दोषदुर्बलः ॥**
**तस्मै दद्याद्भिषक् प्राज्ञो दोषप्रच्यावनं मृदु ॥ ११ ॥**

संप्रति दुर्बलस्य संशोधनं निषिद्धमिह प्रदेशान्तरेऽपि; यदुक्तम्—"अग्निक्षारविरेकैस्तु बालवृद्धौ विवर्जयेत्" (सू. अ. ३५) इति; अत्र हि बालवृद्धौ दुर्बलतयैव विरेचने निषिद्धौ, तेनान्योऽपि दुर्बलो न शोध्य इति फलति, अतस्तत्प्रसवमाह—रोग इत्यादि । दोषदुर्बलमिति दोषप्रभावाद्दुर्बलं, न तु हेत्वन्तरदुर्बलम् । समीक्ष्येति सम्यग्बलं निरूप्य ।

---

१ कोष्ठस्थः पाठो ह. पुस्तके नोपलभ्यते ।

मृद्विति आरग्वधादिमृदुद्रव्यकृतमल्पमात्रं च । अत्र दोषसंबन्धे दुर्बले दोषापहरणेनैव बलं भवतीति भावः ॥ ११ ॥

**चले दोषे मृदौ कोष्ठे नेक्षेतात्र बलं नृणाम् ॥**
**अव्यापद्दुर्बलस्यापि शोधनं हि तदा भवेत् ॥ १२ ॥**
**स्वयं प्रवृत्तदोषस्य मृदुकोष्ठस्य शोधनम् ॥**
**भवेदल्पबलस्यापि प्रयुक्तं व्याधिनाशनम् ॥ १३ ॥**

अवस्थाविशेषेऽपि दुर्बले शोधनप्रयोगमाह—चल इत्यादि । चल इति प्रचले । मृदौ कोष्ठ इति केचिद्दोषप्रबलतयैव मृदुकोष्ठतामिहेच्छन्ति । कुतो बलं नेक्षेतेत्याह—अव्यापद्दुर्बलस्यापीति । अव्यापत्तिकत्वं तु चलदोषस्यावश्याहर्तव्यस्य हरणादिति भावः ॥ १२ ॥ १३ ॥

**व्याध्यादिषु तु मध्येषु क्वाथस्याञ्जलिरिष्यते ॥**
**विडालपदकं चूर्णं देयः कल्कोऽक्षसंमितः ॥ १४ ॥**

**इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने संशोधनसंशमनीयो नामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥**

संशमनद्रव्यपरिमाणपरिभाषां केचित् पठन्ति—व्याध्यादिष्वित्यादि । अञ्जलिः पलचतुष्टयम् । विडालपदकं कर्षः । एतच्च व्याध्यादौ मध्ये उक्तं; तेन उत्तमेऽधिकं, हीने हीनं ज्ञेयम् । अन्यत्राप्युक्तं—"द्रव्यप्रमाणं तु यदुक्तमस्मिन् मध्येषु तत् कोष्ठवयोबलेषु । तन्मूलमालम्ब्य भवेद्विकल्पस्तेषां विकल्प्योऽभ्यधिकोनभावः" (च. क. अ. १२) ॥ १४ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने संशोधनसंशमनीयो नामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

## चत्वारिंशत्तमोऽध्यायः ।

**अथातो द्रव्यरसगुणवीर्यविपाकविज्ञानीयमध्यायं व्याख्यास्यामः १**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

पूर्वाध्यायैरागमप्रतिपादितस्वभावानां द्रव्यरसादिस्वरूपप्रतिपादनादनुमानेनापि तत्स्वभावप्रतिपादनार्थं, तत्रानुक्तद्रव्याणां च द्रव्यरसादिलिङ्गकार्येण स्वरूपज्ञानार्थं द्रव्यरसादिविज्ञानीयोऽभिधीयते । यद्यपि च द्रव्यादिस्वरूपज्ञानमेव प्रथममधिकरोति तस्य सर्वत्रोपयुक्तत्वात्, तथाऽप्यस्य शास्त्रस्य आगमप्रधानतां दर्शयितुं प्रथमं मीमांसकाध्याया उक्ताः, पश्चादनुमानप्रधाना द्रव्यादिज्ञानार्था अध्यायाः कृताः; अमुमेवार्थं दर्शयन्नध्यायान्ते करिष्यति—'अमीमांसान्यचिन्त्यानि' इत्यादि ॥ १ ॥ २ ॥

---

१ 'शक्तत्वात्' इति ह. ।

**केचिदाचार्या ब्रुवते—द्रव्यं प्रधानं, कस्मात्? व्यवस्थितत्वात्, इह खलु द्रव्यं व्यवस्थितं न रसादयः, यथा—आमे फले ये रसादयस्ते पक्के न सन्ति; नित्यत्वाच्च, नित्यं हि द्रव्यमनित्या गुणाः, यथा कालादिप्रविभागात्तदेव संपन्नरसगन्धं व्यापन्नरसगन्धं वा भवति; स्वजात्यवस्थानाच्च, यथा हि पार्थिवं द्रव्यमन्यभावं न गच्छत्येवं शेषाणि; पञ्चेन्द्रियग्रहणाच्च, पञ्चभिरिन्द्रियैर्गृह्यते द्रव्यं न रसादयः; आश्रयत्वाच्च, द्रव्यमाश्रिता रसादयः; आरम्भसामर्थ्याच्च, द्रव्याश्रित आरम्भः, यथा—'विदारिगन्धादिमाहृत्य संक्षुद्य विपचेत्' इत्येवमादिषु न रसादिष्वारम्भः; शास्त्रप्रामाण्याच्च, शास्त्रे हि द्रव्यं प्रधानमुपदेशे योगानां, यथा—'मातुलुङ्गाग्निमन्थौ च' (सू. अ. ३९) इत्यादौ न रसादय उपदिश्यन्ते; क्रमापेक्षितत्वाच्च रसादीनां, रसादयो हि द्रव्यक्रममपेक्षन्ते, यथा—तरुणे तरुणाः संपूर्णे संपूर्णा इति; एकदेशसाध्यत्वाच्च, द्रव्याणामेकदेशेनापि व्याधयः साध्यन्ते, यथा—महावृक्षक्षीरेणेति; तस्माद्द्रव्यं प्रधानं, न रसादयः, कस्मात्? निरवयवत्वात्। द्रव्यलक्षणं तु 'क्रियागुणवत् समवायिकारणम्' इति ॥ ३ ॥**

अत्र द्रव्यादीनां प्रत्येकं प्राधान्यमेकीयमतेन दर्शयितुं द्रव्यप्राधान्ये प्रथमं सहेतुकमेकीयमतमाह—तत्रेत्यादि । एतच्च एकीयमतोपदर्शनं सम्यग्द्रव्यादिस्वभावज्ञानार्थं; अभिनिविष्टो हि वादी स्वपक्षसाधनार्थं सर्वं स्वरूपप्राधान्याख्यापकं दर्शयति, तेन चान्ते वक्ष्यमाणाचार्य(सिद्धान्तसहितेन सम्यक् प्रतीतिर्भवति; एतदर्थमेव चरकेऽपि वातादिप्राधान्यादेकीयमतान्युपन्यस्य वातकलाकलीयादावाचार्य)[2]मतमुपदर्शितम् । व्यवस्थितत्वादित्यवस्थाभेदेन रसादिभेदेऽपि द्रव्यस्य व्यवस्थितत्वात्; यथा—आम्रफलं प्रथमं कषायाम्लं, मध्येऽम्लं, ततो मधुरम्; एवं रसाव्यवस्थानेऽपि द्रव्यमाम्ररूपतया व्यवस्थितम्। हेत्वन्तरमाह—नित्यत्वादिति । नित्यत्वं रसादिनाशेऽप्यवस्थितत्वमिह ज्ञेयं; व्यवस्थितत्वं तु रसाद्यन्यथात्वे तद्रूपतया व्यवस्थितत्वमिति विशेषः । कालादीत्यत्रादिशब्देन जलवातादयो गृह्यन्ते । व्यापन्नरसगन्धमिति नष्टरसगन्धम् । अत एकस्मिन् द्रव्यप्राधान्ये साध्ये बहुहेतूपदर्शनं शास्त्रत्वादेव भवति । वादे हि द्वितीयादिहेतुकथनमसाधनाङ्गवचनमिति नोपादीयते । स्वजात्यवस्थानादिति परिणामेऽपि द्रव्यं स्वजातावतिष्ठते न जात्यन्तरं भवति; यत् पार्थिवं तत् पार्थिवमिति, यदाप्यं तदाप्यमेवेत्यादि जात्यपरित्यागः; रसस्तु क्षीरे मधुरत्वं परित्यज्य चाम्लतां यातीत्याद्यनुसर्तव्यम् । जातिश्चेह पार्थिवत्वादिरूपा व्यवस्थिता अभिप्रेता; तेन क्षीरस्य दधित्वं, गुडस्य शर्करात्वमित्यादि जातिभेदो नोद्भावनीयः । पञ्चेन्द्रियग्रहणादित्यत्र पञ्चभिरिन्द्रियैर्द्रव्यं गृह्यत इति चक्षुषा

---

१ 'शास्त्रं ह्याह—'द्विविधं द्रव्यं स्थावरं जङ्गमं च' इति ता. । २ कोष्ठस्थः पाठो ह. पुस्तके नोपलभ्यते ।

स्पर्शनेन तावद्द्रव्यग्रहणमविवादसिद्धमेव, घ्राणरसनाश्रोत्राणामपि सुरभि चन्दनं, तथा मधुरः कोषकारः, तथा सुस्वरा वीणेत्यादि सामानाधिकरण्यज्ञाने द्रव्यग्रहणं प्रति स्फुटतरव्यापाराद् द्रव्यग्राहकत्वं ज्ञेयम् । आश्रयत्वाच्चेति रसादीनां द्रव्यमाश्रयः; तेनाश्रिता रसादयः परतन्त्रत्वादप्रधानाः, आश्रयस्तु प्रधानमित्यर्थः । आरम्भसामर्थ्यादिति षष्ठो हेतुर्व्यक्तः । शास्त्रप्रामाण्यादिति शास्त्रेण प्रमाणेन प्राधान्येनोपदेशात् । क्रमापेक्षितत्वादिति द्रव्यक्रमापेक्षितत्वाद्रसादीनाम् । तरुणा इत्यसंपूर्णाः । एकदेशक्रियासाध्यत्वादिति नवमो हेतुर्व्यक्तः । कस्माद्रसादीनामप्येकदेशेन न व्याधयः साध्यन्त इत्याह—निरवयवत्वादिति । व्युत्पादितप्राधान्यस्य द्रव्यस्य लक्षणमाह—द्रव्यलक्षणमित्यादि । क्रियावत् गुणवत् समवायिकारणं द्रव्यमिति । (क्रिया[1]कर्म, गुणा रसादयः, समवायिकरणं स्वसमवेतकार्यजनकम् । ) एते क्रियावत्त्वादयो रसादिव्यावर्तका इतीहोक्ताः । तथा **चरके**ऽप्येतदेवोक्तम्—“यत्राश्रिताः कर्मगुणाः कारणं समवायि यत् । तद्द्रव्यं” ( च. सू. अ. १ ) इति) । सर्वद्रव्यव्यापकविजातीयव्यावृत्तं तु लक्षणमिह गुणवत्त्वमेव । एतदेव क्रियागुणयोर्यथाक्रमं द्रव्यव्याप्यक्रिया द्रव्ये विद्यते, गुणाः समवयन्तीति ( विद्यते[2] इति सत्तामात्रं व्याप्तिः, समवयन्तीति ) व्याप्य द्रव्यमवतिष्ठन्ते न हि निर्गुणं द्रव्यं किंचिदस्ति ॥ ३ ॥

**नेत्याहुरन्ये, रसास्तु प्रधानं; कस्मात्? आगमात्, आगमो हि शास्त्रमुच्यते; शास्त्रे हि रसा अधिकृताः, यथा—रसायत्त आहार इति, (त[3]स्मिंस्तु प्राणाः;) उपदेशाच्च, उपदिश्यन्ते हि रसाः, यथा—मधुराम्ललवणा वातं शमयन्ति; अनुमानाच्च, रसेन ह्यनुमीयते द्रव्यं, यथा—मधुरमिति; ऋषिवचनाच्च, ऋषिवचनं वेदो यथा—किंचिदिज्यार्थं मधुरमाहरेदिति; तस्माद्रसाः प्रधानं; रसेषु तु गुणसंज्ञा । रसलक्षणमन्यत्रोपदेक्ष्यामः ॥ ४ ॥**

द्रव्यादपि रसप्राधान्यं दर्शयितुं द्रव्यप्राधान्यं निषेधयति—नेत्याहुरन्ये इत्यादि । एते द्रव्यप्राधान्यख्यापका हेतवो वक्तव्यरसप्राधान्यहेत्वपेक्षया अप्रयोजका इत्यभिमानो रसवादिनो ज्ञेयः । एवं वीर्यवादिनः तथा विपाकवादिनश्च ‘नेत्याहुरन्ये’ इति वचनमनया दिशा व्याख्येयम् । रसप्राधान्ये आगमादिति हेतुः आगम एव कण्ठरवेण रसस्य प्राधान्यं कथयतीत्याहुः । उपदेशादिति तु रसेन द्रव्यादिसमुदायकार्योपदेशादित्यर्थभेदो नेयः । ऋषिवचनमिह वेदः, ऋषय आप्ताः, तद्वचनता च वेदस्य ऋषिभिः प्रथममुदाहरणान्न तु ऋषिकार्यतया; किंवा न्यायमतेन महेश्वररूपर्षिवचनता वेदस्य ज्ञेया । अथ द्रव्यादिप्राधान्यविचारे कस्माद्गुणा नोद्भाविता इत्याह—रसेषु तु गुणसंज्ञेति । रसेष्वित्युपलक्षणं, तेन वीर्यविपाकयोरपि गुणसंज्ञेति बोद्धव्यं; तेन रसादिप्राधान्यव्युत्पादनेनैव गुणविशेषप्राधान्यं लभ्यत इत्यर्थः । अन्यत्रोपदेक्ष्याम इति रसविशेषविज्ञानीये ॥ ४ ॥

---

१–२ कोष्ठस्थः पाठो ह. पुस्तके न पठ्यते । ३ कोष्ठस्थः पाठस्ताडपत्रपुस्तके न पठ्यते ।

**नेत्याहुरन्ये, वीर्यं प्रधानमिति। कस्मात्? प्राधान्यात्[1]; इहौषधकर्माण्यूर्ध्वाधोभागोभयभागसंशोधनसंशमनसांग्राहिकाग्निदीपनपीडनलेखनबृंहणरसायनवाजीकरणश्वयथुकरविलयनदहनदारणमादनप्राणघ्नविषप्रशमनादीनि वीर्यप्राधान्याद्भवन्ति[2]। तच्च वीर्यं द्विविधमुष्णं शीतं च, अग्नीषोमीयत्वाज्जगतः। केचिदष्टविधमाहुः—शीतमुष्णं स्निग्धं रूक्षं विशदं पिच्छिलं मृदु तीक्ष्णं चेति। एतानि खलु वीर्याणि स्वबलगुणोत्कर्षाद्रसमभिभूयात्मकर्म कुर्वन्ति। यथा तावन्महत्पञ्च[3]मूलं कषायं तिक्तानुरसं वातं शमयति, उष्णवीर्यत्वात्; तथा कुलत्थः कषायः, कटुकः पलाण्डुः, स्नेहभावाच्च; मधुरश्चेक्षुरसो वातं वर्धयति, शीतवीर्यत्वात्; कटुका पिप्पली पित्तं शमयति, मृदुशीतवीर्यत्वात्, अम्लमामलकं लवणं सैन्धवं च; तिक्ता काकमाची पित्तं वर्धयति, उष्णवीर्यत्वात् मधुरा मत्स्याश्च; कटुकं मूलकं श्लेष्माणं वर्धयति, स्निग्धवीर्यत्वात्; अम्लं कपित्थं श्लेष्माणं शमयति, रूक्षवीर्यत्वात्, मधुरं क्षौद्रं च तदेतन्निदर्शनमात्रमुक्तम्॥ ५॥**

वीर्यप्राधान्यवादिमतमाह—नेत्याहुरन्य इत्यादि। प्राधान्यादिति प्रधानधर्मयोगात्, प्रधानधर्मश्च वीर्यवशेनौषधानां कार्यनिष्पादकत्वम्। एतदेवाह—इहौषधेत्यादि। औषधकर्माणीति औषधकार्याणि। तान्यौषधकार्याण्याह—तद्यथोर्ध्वेत्यादि। ऊर्ध्वभागादिभिः संशोधनशब्दः प्रत्येकमभिसंबध्यते; किंवा संशोधनं बहिःसंशोधनं व्रणसंशोधनादि गृह्यते। श्वयथुशब्देन करविलयनशब्दौ प्रत्येकं संबध्येते। आदिशब्देन पाचनविरूक्षणस्नेहनादिग्रहणम्। अत्र च वीर्यशब्देन द्रव्यस्य द्विविधाऽपि चिन्त्या अचिन्त्या च शक्तिरुच्यते। तत्राचिन्त्या शक्तिर्या तन्त्रान्तरे 'प्रभाव' इत्युच्यते सा ग्राह्या, तस्यैव च वीर्यस्य प्रभावाख्यस्य स्वतन्त्रे "तद्द्रव्यमात्मना किंचित्" इत्यादिना निष्कृष्टद्रव्यप्रकारतयोक्तस्य एतदधोभागत्वविषहरत्ववृष्यत्वादि प्रायः कार्यं, न हीदमुष्णशीताभ्यां वीर्याभ्यामष्टाभिर्वोष्णादिभिर्वीर्यैरुपपद्यते कार्यं; तन्त्रान्तरेऽपि—"ऊर्ध्वानुलोमिकं यच्च प्रभावस्तत्र कारणम्" (च. सू. अ. २६), तथा "विषं विषघ्नमुक्तं यत् तत्प्रभावप्रभावितम्"; तथा "रसवीर्यविपाकानां सामान्यं यत्र लक्ष्यते। विशेषः कर्मणां चैव प्रभावस्तत्र कारणम्॥ कटुकः कटुकः पाके वीर्योष्णश्चित्रको मतः। तद्वद्दन्ती प्रभावात्तु विरेचयति मानवम्" (च. सू. अ. २६), तथा—"मणीनां धारणीयानां कर्म यद्विविधा-

---

१ 'तद्वशेनौषधकर्मनिष्पत्तेः' इति ड.। २ 'इहौषधकर्माणि वीर्यप्राधान्येन भवन्ति, तद्यथा—ऊर्ध्व°' इति ता.। ३ 'महत्पञ्चमूलं कषायतिक्तं वातं शमयत्युष्णवीर्यत्वात्, कटुका पिप्पली पित्तं शमयति मृदुशीतवीर्यत्वात्, कटुकं मूलकं श्लेष्माणं वर्धयति स्निग्धशीतवीर्यत्वात्, अम्लं कपित्थं श्लेष्माणं शमयति रूक्षवीर्यत्वात्' एतावानेव पाठस्ताडपत्रपुस्तके पठ्यते।

त्मकम् । तत् प्रभावकृतं विद्धि प्रभावोऽचिन्त्य उच्यते" (च. सू. अ. २६) इति । चिन्त्या तु शक्तिर्द्रव्यस्य रसाः, तथा वीर्याख्या उष्णादयो गुणाः । तत्र रसस्य विपाकस्य च पृथङ्निर्देशान्न वीर्यव्यवहारः शास्त्रे; परिमाणसंख्यादयश्च गुणा न शास्त्रे तथा कार्यकरा इति नेह पृथक्त्वेन द्रव्यरसादिगणनायां गण्यन्ते; **चरके** तु सामान्यवीर्यशब्देन तेऽपि गृहीताः । यथा "येन कुर्वन्ति तद्वीर्यम्" (च. सू. अ. २६) इत्यनेन चिन्त्याचिन्त्यवीर्यम् । चिन्त्यायां वैद्यसंप्रदायेन शीतोष्णलक्षणं द्विविधमष्टविधं वा उष्णशीतस्निग्धरूक्षमृदुतीक्ष्णविशदपिच्छिलरूपमुच्यते । यदा द्विविधं वीर्यं, तदा स्निग्धरूक्षादीनां षण्णामपि परिमाणसंख्यादिवदप्राधान्यविवक्षया रसादिधर्मतयैव कार्यग्रहणम् । वक्ष्यति हि—"मधुरो रसः स्निग्धः" (सू. अ. ४२) इत्यादि । अष्टविधवीर्यपक्षे तु उष्णादीनां सर्वेषामेव बलवत्कार्यकर्तृत्वविवक्षया वीर्यत्वमिति स्थितिः । संप्रति शास्त्रे व्यवहारसिद्धमेव वीर्यं विवेचयन्नाह—तद्वीर्यमित्यादि । अग्नीषोमीयत्वादिति अग्नीषोमप्रधानत्वात् । कथमेतान्युष्णत्वादीनि वीर्याख्यानीत्याह—एतानि खल्वित्यादि । स्वबलगुणोत्कर्षादिति बलं शक्तिः, स एव गुणः, प्रशस्तत्वात्; स्वशक्तिरूपगुणोत्कर्षादुष्णादीनि रसमभिभूय स्वकार्यं कुर्वन्ति । एतानि वीर्याणि रसमभिभूय स्वकार्यं दर्शयन्तीत्याह—यथा महदित्यादि । अत्र कषायतिक्तत्वाभ्यां वातकोपनं ग्राह्यं, तत्र स्वकार्यमभिभूय उष्णेन वीर्येण तद्विरुद्धं वातप्रशमनमेव क्रियते, अनया दिशा उदाहरणान्तराण्यपि व्याख्येयानि । पिप्पल्याः शीतवीर्यत्वमिहाप्याचार्येण स्वीकृतमेव । येन "तेषु गुर्वी स्वादुशीता पिप्पल्यार्द्रा कफावहा । शुष्का कफानिलहरी वृष्या पित्ता विरोधिनी" (सू. अ. ४६) इत्यनेन पित्ते ईषद्विरोधिनीतीषदर्थेन नञा उक्तं; तेन पित्तं स्तोकं क्रमेण शमयतीत्यर्थः । **चरके** तु "पिप्पल्यः कटुकाः सत्यो मधुरविपाकाः" (च. वि. अ. १) इत्यादिना मधुरविपाकतया भङ्ग्यन्तरेण शीतवीर्यं तत्साध्यं वा पित्ते[1] मनाक्शमकत्वं स्वीकृतमेव । वैद्याश्च पित्ते पिप्पलीप्रयोगं कारयन्त्येव । काकमाच्यास्तु पित्तकर्तृत्वं वीर्यवादिमतमेव परं, नाचार्यमतेनेति ब्रुवते; येन "ईषत्तिक्तं त्रिदोषघ्नं काकमाच्याश्च तद्विधम्" (सू. अ. ४६) इत्यनेन त्रिदोषघ्नत्वान्नात्युष्णशीतत्वाच्च काकमाच्याः पित्तजनकत्वानुपपत्तेः । तथा **चरके**ऽपि—"त्रिदोषशमनी वृष्या काकमाची रसायनी । नात्युष्णशीता स्वर्या च भेदनी कुष्ठनाशनी" (च. सू. अ. २७) इति पठ्यते । अन्ये तु वदन्ति यत्—समुदितान् त्रीन् दोषानाचार्यवचनात् काकमाची हन्ति, पृथक् तु काकमाची पित्तं जनयत्येवेत्यविरोधं मन्यन्ते । अन्ये तु काकमाचीशाकं त्रिदोषघ्नत्वादिगुणं भवतु, मूलं तु तस्या उष्णवीर्यत्वात् पित्तकरमिति व्यवस्थां वदन्ति । कटुकं मूलकमित्यादिना वृद्धं मूलकमुच्यते, बालमूलकस्य त्रिदोषहरत्वात् । यदुक्तं—"कटुतिक्तरसा हृद्या रोचनी वह्निदीपनी । सर्वदोषहरी लघ्वी कण्ठ्या मूलकपोतिका" (सू. अ. ४६) इति ॥ ५ ॥

---

१ 'पित्तस्य नाशकत्वं' इति सू. ।

भवन्ति चात्र—

ये रसा वातशमना भवन्ति यदि तेषु वै ॥
रौक्ष्यलाघवशैत्यानि न ते हन्युः समीरणम् ॥ ६ ॥
ये रसाः पित्तशमना भवन्ति यदि तेषु वै ॥
तैक्ष्ण्यौष्ण्यलघुताश्चैव न ते तत्कर्मकारिणः ॥ ७ ॥
ये रसाः श्लेष्मशमना भवन्ति यदि तेषु वै ॥
स्नेहगौरवशैत्यानि न ते तत्कर्मकारिणः ॥ ८ ॥

तस्माद्वीर्यं प्रधानमिति ॥ ९ ॥

संप्रति सामान्येन रसाभिभावकत्वं वीर्यस्य श्लोकेनाह—ये रसा इत्यादि । ये रसा वातशमना इति मधुराम्ललवणाः, पित्तशमना मधुरतिक्तकषायाः, एवं श्लेष्मशमनाः कटुतिक्तकषाया ज्ञेयाः । एतच्छ्लोकत्रयार्थप्रतिपादितार्थस्य च यत्र तु क्वचिदन्यथात्वं भवति, तत्र द्रव्यादिमहिम्ना अपवादरूपं भवतीति नास्यार्थस्य व्यभिचारः; क्वचिदनार्षत्व-मस्य श्लोकत्रयस्य वर्णनीयमुपपादितम् । वीर्यप्राधान्यमुपसंहरति—तस्मादित्यादि ॥ ६–९॥

नेत्याहुरन्ये, विपाकः प्रधानमिति । कस्मात्? सम्यङ्मिथ्याविपाकि[1]त्वात्; इह सर्वद्रव्याण्यभ्यवहृतानि सम्यङ्मिथ्याविपकानि गुणं दोषं वा जनयन्ति । तत्राहुरन्ये—प्रतिरसं पाक इति, मधुरो मधुरस्याम्लोऽम्लस्यैवं सर्वेषामिति; दृष्टान्तं चोपदिशन्ति—यथा शालियवमुद्गादयः प्रकीर्णाः स्वभावमुत्तरकालेऽपि न परित्यजन्ति तद्वदिति । केचित् पुनरबलवन्तो बलवतां वशमायान्ति, तस्मादनवस्थितः पाक इति । केचित्त्रिविधमिच्छन्ति—मधुरमम्लं कटुकं चेति । तच्चु न सम्यक्, भूतगुणादामाच्चाम्लो विपाको नास्ति; पित्तं हि विदग्धमम्लतामुपैत्याग्नेयत्वात्; यद्येवं लवणोऽप्यन्यः पाको भविष्यति, श्लेष्मा हि विदग्धो लवणतामुपैतीति । आगमस्त्वाह—द्विविध एव पाको मधुरः कटुकश्च । तयोर्मधुराख्यो गुरुः, कटुकाख्यो लघुरिति । तत्र पृथिव्यप्तेजोवाय्वाकाशानां द्वैविध्यं भवति तद्गुणसाधर्म्याद्गुरुता लघुता च; पृथिव्यापश्च गुर्व्यः, शेषाणि लघूनि; तस्माद्विविध एव विपाक इति ॥ १० ॥

भवन्ति चात्र—

द्रव्येषु पच्यमानेषु येष्वम्बुपृथिवीगुणाः ॥
निर्वर्तन्तेऽधिकास्तत्र पाको मधुर उच्यते ॥ ११ ॥
तेजोऽनिलाकाशगुणाः पच्यमानेषु येषु तु ॥
निर्वर्तन्तेऽधिकास्तत्र पाकः कटुक उच्यते ॥ १२ ॥

१ '०विपकत्वात्' इति पा० ।

विपाकप्राधान्यवादिमतं वीर्यवादिमतं निषेधयित्वा प्राह—नेत्याहुरित्यादि । विपाकः प्रधानमिति प्रतिज्ञा । विपाकशब्देनेह लक्षणया अभ्यवहृतद्रव्यान्त्यपाकाधेय आहारस्य रसविशेषो गौरवेण लाघवेन वा युक्तोऽभिधीयते । यदुच्यते—"जाठरेणाग्निना योगाद्यदुदेति रसान्तरम् । आहारपरिणामान्ते स विपाकः प्रकीर्तितः"—( वा. सू. अ. ९ ) इति । विशिष्टो नैष्ठिकः पाको विपाक इत्यर्थः । अत्र हेतुः—सम्यङ्मिथ्याविपाकत्वादिति । अस्यार्थं व्याकरोति—सर्वद्रव्याणीत्यादि । सम्यग्विपक्वानि गुणं, मिथ्याविपक्वानि दोषं जनयन्ति । सम्यक्पाकः समेनाग्निना, मिथ्यापाकस्तु हीनातिपाकरूपो यथाक्रमं मन्देन तीक्ष्णेन चाग्निना क्रियते; तत्र हीनपाके आमविकाराः, तीक्ष्णपाके च भस्मकविकारा दोषाः; समपाके तु धातुसाम्यं गुणश्च । अयं च पाको यद्यपि जठराग्न्यधीनः सर्वाहारसाधारणो न तु द्रव्याधीनो द्रव्यगुणरूपो य इहाधिकृतः "पिप्पल्यो मधुरविपाकाः, अर्घ्यं मधु कटुविपाकं" इत्यादिना प्रतिपादनीयः । अयमेव हि पाक एतत्प्रकरणसिद्धान्ते "तद्द्रव्यमात्मना किंचित्" इत्यादौ दर्शितः । तथा ह्युभयोरपि पाकयोरग्न्याधेयान्त्यपाकरूपतया एकत्र प्राधान्ये साधितेऽपरत्रापि सिद्धं भवतीति ग्रन्थार्थो नेयः । किंवा सम्यक्पाको द्रव्यगुणानुगुणः पाकः; यथा—चित्रकः कटुकः पाके, तथा क्षीरं मधुरं रसपाकयोरित्यादि; अत्र हि द्रव्यगुणसदृश एव पाकः; मिथ्यापाकः तद्द्रव्यगुणविसदृशः पाकोऽपि; यथा—"पिप्पल्यः कटुकाः सत्यो मधुरविपाकाः" ( च. वि. अ. १ ) इत्यादौ । गुणं दोषं वा जनयन्तीति सम्यक्पाके तथा मिथ्यापाके च प्रत्येकं योजनीयम् । येन द्रव्यगुणानुगुणो हि मधुरः पाकः सृष्टमूत्रादिगुणं कफजननं च दोषं करोति, तथा द्रव्यगुणविसदृशश्च पिप्पल्याः कटुकाया मधुरः पाको यथोक्तं गुणं दोषं वा करोति । अस्मिन् व्याख्यानेऽभिमतद्रव्याधीनपाकप्राधान्ये हेतुरुक्तो भवतीति नासंगतार्थता हेत्वर्थस्य; यस्माद्रसं वीर्यं च तिरस्कृत्यान्त्यो विपाको गुणं दोषं वा जनयति; तेन विपाकः प्रधानमिति । संप्रति स्वाभिमतविपाकस्वरूपं दर्शयितुं पराभिमतविपाकानुपन्यस्यति—तत्राहुरन्य इत्यादि । प्रतिरसपाकमेव विवृणोति—मधुरो मधुरस्येत्यादि । अत्र दृष्टान्तमाह—यथेत्यादि । प्रकीर्णा इत्युप्ताः, तेन यथा शालियवादय उप्तप्ररूढाः फलिताश्च शाल्यादिस्वरूपा एव भवन्ति, एवं मधुरादयोऽपि निष्ठापाकेऽपि मधुरादिस्वरूपा एव भवन्ति । अत्रैव पक्षे मतान्तरमाह—केचित् पुनरित्यादि । अबलवन्तो रसा अल्पतया बलवतामित्युल्बणानां रसानां वशतां पराधीनतामल्पतामिति यावत् । तेन निष्ठापाकेन बलवता दुर्बलरसाभिभवान्न प्रतिनियमेन मधुरस्य मधुरः पाकोऽम्लस्य वाऽम्लः पाक इत्यादिप्रतिनियमाभावादनवस्थितः पाक इत्यर्थः । मतान्तरं **चरकस्याह**—केचित्त्रिविधमित्यादि । एतच्च मधुरादिपाकत्रयं नैष्ठिकं चरकमतं क्वचिद्रसद्वाराऽभिहितं; यथा—"कटुतिक्तकषायाणां विपाकः प्रायशः कटुः । अम्लोऽम्लं पच्यते स्वादुर्मधुरं लवणस्तथा" ( च. सू. अ. २६ ) इति; क्वचिद्द्रव्यद्वाराभिहितं यथा—"पिप्पल्यः कटुका मधुरविपाकाः" ( च. वि. अ. १ ) इति, तथा "मधुरश्चाम्ललवणश्च व्रीहिः" ( च. सू. अ. २७ ), तथा "लावः स्वादुः कटुक-

विपाकः” इत्यादिना; तज्ज्ञेयम् । यत्तु अवस्थापाके मधुरत्वादि स्थानमहिम्ना “अन्नस्य भुक्तमात्रस्य षड्रसस्य प्रपाकतः । मधुरात् प्राक् कफो भावात् फेनभूत उदीर्यते” ( च. चि. अ. १५ ) इत्यादिना चरकोक्तं, तदनैष्ठिकपाकत्वादेव इहानधिकृतम् । उक्तानि परमतानि दूषयति—तत्तु न सम्यगिति । अत्र हेतुः—भूतगुणादिति । अत्र च पाकादिति शेषः । तेन ‘तत्र पृथिव्यप्तेजोवाय्वाकाशानां द्वैविध्यं भवति’ इत्यादिना वक्तव्यगुरुलघुलक्षण-द्वैविध्येन द्विविधस्यैव पाकस्योपपन्नत्वादित्यर्थः । आगमादिति ‘आगमस्त्वाह’ इत्यादिना दर्शनीयागमात् । एवं मन्यते—प्रतिरसं सदृशः पाकस्तथा बलवत्पराधीनता च पाकस्य रसद्वारप्रतिपाद्यमानकार्येणैव लब्धा, तेनैतत्पक्षद्वयं यावन्न निष्ठापाके चिन्तनीयं; योऽपि चरकेऽम्लोऽधिकः पाकः स भूतगुणानां द्विविधपाकनिष्पादकत्वप्रतिनियमादेव न भवति । पित्तस्य तु विदाहावस्थायामम्लपाकता भवति, तया समं पाकत्रैविध्यं येऽभिमन्यन्ते तन्मतं चतुर्थलवणपाकप्रसंगेन दूषयन्नाह—पित्तं विदग्धमित्यादि । आगमादिति यदुक्तं तद्व्याकरोति—आगमस्त्वाहेति । आगम इह धन्वन्तरिवचनम् । तमनुवदति—द्विविध एव पाको मधुरः कटुकश्चेति । मधुरकटुकयोर्यथाक्रमं गुरुतां लघुतां च चिकित्सोपयुक्तां दर्शयति—तयोर्मधुर इत्यादि । मधुरे गौरवस्य कटौ च पाके लाघवस्योपपत्तिं दर्शयन् भूतगुणादिहेतुत्वं च व्याकरोति—तत्र पृथिवीत्यादि । पञ्चानां भूतानां कथं द्वैविध्य-मित्याह—तद्गुणसाधर्म्यादिति । पाकतया पित्तकरत्वं तथा कुलत्थानामम्लपाकतया शुक्रहन्तृत्वमुक्तं, यथा—“मधुरश्चाम्लपाकश्च व्रीहिः पित्तकरो गुरुः ।” ( च. सू. अ. २७ ); “उष्णाः कषयाः पाकेऽम्लाः कफशुक्रानिलापहाः ॥ कुलत्था” ( च. सू. अ. २७ ) इत्यादौ; तथा विपाकगुणे—“पित्तकृत् सृष्टविण्मूत्रः पाकोऽम्लः शुक्रनाशनः ।” ( च. सू. अ. २६ ) इति **चरकोक्तं**, तत्सर्वं सुश्रुते उष्णवीर्यताकार्यं क्वचिद्द्रव्यस्वभाव इति स्वीक्रियते । तेन प्रमेये द्रव्यगुणे चरकसुश्रुतयोर्विप्रतिपत्तिर्नास्त्येव । यत्त्वत्र वक्तव्यं—“पञ्चभूतात्मके देहे आहारः पाञ्चभौतिकः । विपक्वः पञ्चधा सम्यक् स्वान् गुणानभिवर्धयेत्” ( सू. अ. ४६ ) इति; अनेन पञ्चधा पाकोऽभिहितः, स द्रव्यस्वरूप-चिन्तनीयो नैतत्पाकद्वयविरोधी; यथा पञ्चभूतात्मकत्वेऽपि द्रव्याणां सौम्याग्नेयत्वाद् द्वैविध्यं भवति । या तु **चरके** अवस्थापाकाभिधानेऽन्तिमपाके कटुकताऽभिहिता, “पक्वाशयं तु प्राप्तस्य शोष्यमाणस्य वह्निना । परिपिण्डितपक्वस्य वायुः स्यात् कटुभावतः ।” ( च. चि. अ. १५ ) इत्यादिना सा वातप्रकोपमात्रे हेतुः, न नैष्ठिकमधुरपाकाधेय-सृष्टमूत्रपुरीषतासम्यक्शुक्रजननादिविरोधिनीति न विरोधः ॥ १०–१२ ॥

**पृथक्त्वदर्शिनामेष वादिनां वादसंग्रहः ॥**
**चतुर्णामपि सामग्र्यमिच्छन्त्यत्र विपश्चितः ॥ १३ ॥**
**तद्द्रव्यमात्मना किंचित् किंचिद्वीर्येण सेवितम् ॥**
**किंचिद्रसविपाकाभ्यां दोषं हन्ति करोति वा ॥ १४ ॥**

संप्रति द्रव्यादिप्राधान्ये एकीयमतानि दर्शयित्वा स्वमतं सिद्धान्तरूपमाह—पृथक्त्वे-

स्यादि । पृथक्त्वेन एकैकस्योक्तेन द्रव्यादीनामितरप्राधान्यापवादपूर्वकं प्राधान्यं द्रष्टुं शीलं येषां ते पृथक्त्वदर्शिनः । पृथक्त्वशब्दोऽपि प्रकरणागतेन द्रव्यादिप्राधान्येन संबध्यते, यतो न द्रव्यादीनामिह पृथक्त्वं वादिभिः पक्षीकृतम्, एकैकप्राधान्यं तु पक्षीकृतम्, अत एकैकप्राधान्यमेवानूद्य तत्प्रतिषेधो युक्तः । एष इत्यनन्तरप्रक्रान्तवादसंग्रह इति, द्रव्यमेव प्रधानमित्यादिरूपो वादपरिग्रहः । एतत्पक्षविपरीतपक्षं सर्वप्राधान्यं सिद्धान्ततया दर्शयन्नेव एकैकप्राधान्यपक्षान्निषेधयन्नाह—चतुर्णामित्यादि । चतुर्णामिति द्रव्यरसवीर्यविपाकानां प्राधान्यानाम् । समग्रस्येदं सामग्र्यं मेलकमित्यर्थः । अत्रेति प्राधान्यचिन्तायाम् । विपश्चित इति प्रामाणिकाः । तेन प्रामाणिकेच्छया मेलकस्यैव प्रामाण्यं फलति, सामग्र्येण चेह धर्मेण समग्रा धर्मिणो विवक्षिताः । यत्र द्रव्यप्राधान्यं तत्र रसादीनामप्राधान्यं (किंचिदप्रधानमवशिष्यते यदपेक्षया प्राधान्यं स्यात्, तस्मात् स्वस्व-कार्ये सर्वेषामेव पृथक् प्राधान्यं), यत्र रसप्राधान्यं तत्र द्रव्यादीनामप्राधान्यमित्याद्यनुसरणी-यम् । एतदेव स्वस्वविषये द्रव्यादिप्राधान्यमाह—तद्द्रव्यमित्यादि । तदिति तस्मात् द्रव्यादि-सामग्र्यप्राधान्यात् । अत्र द्रव्यमेव पञ्चमहाभूतविकारविशेषमन्नपानभेषजरूपं पाञ्चभौतिकश-रीरस्य धातुवैषम्यरूपदोषं विकारं वा धातुसाम्यरूपदोषविकारोपशमनं वा समवायि-कारणतया कुर्वन् कर्तृत्वेन व्यवस्थाप्यते; तदाश्रितास्तु द्रव्यशक्तिरूपप्रभावरसवीर्यविपाका यथायोगं निमित्तकारणतां समवायिकारणतां वा भजन्ते; न कर्तृतया व्यपदिश्यन्ते, द्रव्यपराधीनत्वात् । यत्तु "मधुराम्ललवणा वातं घ्नन्ति" ( सू. अ. ४२ ) इत्यादिना रसादीनामपि कर्तृत्वं व्यपदिश्यते, तद्रसादिप्राधान्यतया न तु परमार्थतः, तेषां नित्यं द्रव्यपराधीनत्वात्; तेन द्रव्यप्रभावादेव रसादिसाध्ये कार्ये द्रव्यमेव कर्तृतयोपदिशति—द्रव्यमात्मनेत्यादि । किंचिद्द्रव्यमात्मनेति आत्मशक्त्या प्रभावाख्यया दोषं हन्ति करोति वा; दोषमिति दोषशब्देन च विकारोऽपि गृह्यते । यदुच्यते—"दोषाः कुपिता रोगशब्दं लभन्ते"—इति । शक्तिश्च द्रव्यस्य स्वरूपरूपा सामान्यविशेषात्मिका न्यायदर्शनसिद्धा वा भवतु भट्टनयसिद्धा वा तदतिरिक्ता कार्यगम्या भवतु, नेह तद्विचारः प्रयोजकः, उभयथाऽपि शक्तिसिद्धेः । इयमेव च शक्तिस्तन्त्रान्तरे प्रभावशब्देन, इह चाचिन्त्य-शब्देन व्यवह्रियते । अत्र द्रव्यशक्तिकार्योदाहरणं यथा—कर्षकमणिर्लोहशल्यमाकर्षति, तथा विषमणिर्विषमपहरतीत्यादि । उक्तं हि **चरके**—"मणीनां धारणीयानां कर्म यद्विविधात्मकम् । तत् प्रभावकृतं विद्यात् प्रभावोऽचिन्त्य उच्यते" ( च. सू. अ. २६ ) इति । किंचिद्वीर्येणेति यथा कुलत्थः कफवातघ्नः कषायोऽपि उष्णाद्वीर्यादनिलनाशन इति । किंचिद्रसादित्यस्योदाहरणं यथा—"कषाया मारुतं पित्तमूषरा मधुरा कफम् । मृज्जनयति" ( च. चि. अ. १६ ) इत्यादि । किंचिद्विपाकादित्यस्योदाहरणं यथा—शुण्ठी रसात् कटुका, वीर्येण चोष्णा, तयोर्विरुद्धेन विपाकेन मधुरेण वृष्या भवतीत्यादि । रसविपाकाभ्यामिति समासोपदेशेन संभूयापि द्रव्यादीनां कार्यकर्तृत्वं सूचितम् । तेन

१ कोष्ठगतपाठो मु. पुस्तके नास्ति ।

क्वचिद्द्रव्यप्रभाववीर्याभ्यां, क्वचित् द्रव्यप्रभाववीर्यरसैः, क्वचिद्द्रव्यप्रभावरसवीर्यविपाकैर्मिलितैः सर्वैरेव क्रियते कार्यं; यथा—आमलकं त्रिदोषशमनं रसवीर्यविपाकप्रभावैरेव करोति, यथा—"हन्ति वातं तदम्लत्वात् पित्तं माधुर्यशैत्यतः। कफं कषायरूक्षत्वात्" (सू. अ. ४६) इति। अत्र माधुर्यशब्देन विपाकोऽपि मधुरो गृह्यते, शैत्यं तु वीर्यं, प्रभावश्चामलके (शिवत्वलक्षणोत्पन्नयन्त्रिता[1] अम्लत्वादयो न परस्परं पित्तजननादि कुर्वन्ति किंतु दोषशमनमेव कुर्वन्ति)। क्वचिच्च तस्मिन्नेव द्रव्ये प्रभावादिना पृथक् कार्यं निष्पाद्यते; यथा—गुडूची तिक्तरसा पित्तकफहरी, उष्णवीर्यतया वातहरी, मधुरविपाकतया वृष्या, प्रभावात्तु वातरक्तमामं च हन्तीत्याद्युदाहरणमनुसरणीयम्। अत्रार्थे चरकः—"द्रव्याणि हि द्रव्यप्रभावात् गुणप्रभावाद् द्रव्यगुणप्रभावाच्च कार्यकराणि भवन्ति" (च. सू. अ. २६) इति। अत्र हि गुणशब्देन रसवीर्यविपाकानां गुणरूपाणां सर्वेषामेव ग्रहणं; गुणप्रभावाच्च रसादिवच्छक्तिरेव इतररसाद्यबाधितरसादिस्वरूपरूपा, भट्टनयाद्युपगतातिरिक्तशक्तिरूपा तु शक्तिरिह रसादावाचार्यसंमता न भवति, वदन्ति हि—"निर्गुणा गुणा" इति; तेन रसाद्याश्रयधर्मान्तरस्वीकारोऽप्यस्यानेनैव न्यायेनासंमतः। अत्र दोषहरणकरणाभ्यामेव च सर्वद्रव्यकार्यावरोधः। यतो रसायनस्वस्थवृत्तजीवनादिकारणमपि द्रव्यं धातुसामान्यविशेषजनकत्वादनागतरोगप्रशमकारकमुच्यते। एतच्च द्रव्याणां कार्यकर्तृत्वमसति विरोधके ज्ञेयम्। तेनासाध्यव्याधौ द्रव्यादीनां व्याधिनिवर्तकत्वाभावान्न[2] कर्तृत्वम्। यथा—यस्य कोष्ठे पित्तं बलवदस्ति तस्य मधुरशीतादिगुणमपि क्षीरं विदह्यते। यदुक्तं—"स्रोतस्यन्नवहे पित्तं पक्तौ वा यस्य तिष्ठति। विदाहि भुक्तमन्यद्वा तस्याप्यन्नं विदह्यते" (सू. अ. ४६) इत्याद्यनुसरणीयम्। तद्द्रव्यमात्मनेत्यादिना स्वकार्ये सर्वप्राधान्येऽपि मुख्यकर्तृतया द्रव्यं प्रधानमित्युक्तं च दर्शितम्॥ १३–१४॥

**पाको नास्ति विना वीर्याद्वीर्यं नास्ति विना रसात्॥**
**रसो नास्ति विना द्रव्याद्द्रव्यं श्रेष्ठतमं स्मृतम्॥ १५॥**

संप्रति पाकाद्यपेक्षणीयतया पाकाद्याश्रयतया च द्रव्यप्राधान्यं दर्शयन्नाह—पाको नास्तीत्यादि। शीतवीर्यं पृथिवीजलाश्रयं मधुरं गुरुं पाकं निष्पादयति, तथा उष्णवीर्यमग्न्याश्रयमनिलाकाशलाघवसहितं कटुकं लघुपाकं जनयति। यदुक्तं—"द्रव्येषु पच्यमानेषु येष्वम्बुपृथिवीगुणाः। निर्वर्तन्तेऽधिकास्तत्र पाको मधुर उच्यते" इत्यादि। यत्तु शालिषु मधुरशीतेष्वपि कटुपाकत्वं, तद्द्रव्यप्रभावसहितवीर्याद्वा भवतीति नोत्सर्गसिद्धवीर्यकार्यता। विपाकस्य वीर्यस्य वीर्यव्यापकस्य रसस्य च द्रव्यमाधारकारणमिति विपाकवीर्यरसानां सर्वेषामेवाधारकारणतया द्रव्यं प्रधानमित्युक्तं भवति; किंवा विपाका-

---

१ कोष्ठगतपाठस्थाने मु.पुस्तके एवं पाठः—"शिवत्वं, तत्प्रभावात् पित्तजननं न कुर्वन्ति, किन्तु दोषशमनमेव कुर्वन्ति। एवं निकुचगतरसादयो द्रव्यप्रभावाद् दोषानेव परं कुर्वन्ति, न परस्परं दोषान् घ्नन्ति"। २ 'व्याधिबलबाधितत्वात्' इति मु.।

दीनां मुख्यैकार्योपदर्शनमेतत्; यथा द्रव्योपयोगादनन्तरं रसः स्वकार्यं करोति, तदनु वीर्यं परिमाणामवस्थायां कार्यं करोति, ततोऽन्ते विपाकः, तदुक्तं **चरके**—"रसो निपाते द्रव्याणां विपाकः कर्मनिष्ठया। वीर्यं यावदधीवासान्निपाताच्चोपलभ्यते" ( च. सू. अ. २६ ) इति ॥ १५ ॥

**जन्म तु द्रव्यरसयोरन्योन्यापेक्षिकं स्मृतम् ॥**
**अन्योन्यापेक्षिकं जन्म यथा स्याद्देहदेहिनोः ॥ १६ ॥**
**वीर्यसंज्ञा गुणा येऽष्टौ तेऽपि द्रव्याश्रयाः स्मृताः ॥**
**रसेषु न भवन्त्येते निर्गुणास्तु गुणाः स्मृताः ॥ १७ ॥**
**द्रव्ये द्रव्याणि यस्माद्धि विपच्यन्ते न षड्रसाः ॥**
**श्रेष्ठं द्रव्यमतो ज्ञेयं, शेषा भावास्तदाश्रयाः ॥ १८ ॥**

अथ द्रव्यं चेद्रसस्य कारणं, कारणं च नावश्यं कार्यं जनयति, तत् किं रसं विनाऽपि द्रव्यं भवतीत्याशङ्कां निराकुर्वन्नाह—जन्म त्वित्यादि। तत्र द्रव्यं कार्यद्रव्यं धान्यफलवृक्षादि; जन्मशब्देन चाभिव्यक्तिरुच्यते। उत्पादस्य परस्परापेक्षित्वे इतरेतराश्रयादुत्पादश्च न स्यात्; तेन स्वकारणोत्पन्नं द्रव्यं रसं विना द्रव्यमेव न भवति, नीरसस्य कार्यद्रव्यानुपलम्भत्वात्। किंवा रसशब्देन रसधर्मतयोक्ताः सर्व एव गुणा गृह्यन्ते; तेन रसं विना द्रव्यं गुणशून्यतया द्रव्यमेव न भवति; यतो गुणवदिति द्रव्यलक्षणं व्यापकमुक्तं; रसस्तु द्रव्यं विना आश्रयाभावादेव न भवति। एवं दृष्टान्तेऽपि देहो देहिनं विना न भवति; देहिभोगायतनं हि देहः, स शुक्रशोणितावच्छिन्नोऽपि देहिनो जीवस्य संबन्धं विना न देहशब्दं लभते। देही त्वात्मविशेषः। स नित्योऽपि देहसंबन्धप्रयुक्तं देहित्वं न देहमन्तरेण लभत इत्यर्थः। अथ पाको नास्ति विना वीर्यादित्यादिना मुख्यतया रसं द्रव्याश्रयं प्रतिपाद्य रसाश्रयतया वीर्यस्यापि द्रव्याश्रयत्वं परंपरया प्रतिपादितम्। संप्रति रसवद्वीर्यस्यापि द्रव्याश्रयत्वं प्रतिपादयन्नाह—वीर्यसंज्ञा इत्यादि। अपिशब्दात् स्थूलसूक्ष्मसंख्यारूपादयोऽपि गुणा द्रव्याश्रयत्वेन गृह्यन्ते। एतद्गुणकार्यत्वं च स्वल्पं, तच्च द्रव्यधर्मतया रसादिधर्मतया वा वैद्यकतन्त्रव्यवहाराद्गृह्यते। अथ रसाश्रयाः पूर्वममी गुणा उक्ताः, तथा रसगुणकथने च "मधुरो रसः शीतः" ( सू. अ. ४ ) इत्यादिना रसाश्रया वीर्यादयो गुणा वक्तव्याः, तत् कथमिह द्रव्याश्रया उच्यन्त इत्याह—रसेषु न भवन्तीत्यादि। एतेन परमार्थतो रसे गुणे निर्गुणत्वाद् वीर्यरूपा गुणास्तथाऽन्ये संख्यादयो गुणा न भवन्त्येव। एकाश्रयतया तूपचारात् सुखेन द्रव्यगुणप्रतीत्यर्थं रसगोचरतयोच्यन्ते। तदुक्तं **चरके**—"गुणा गुणाश्रया नोक्तास्तस्माद्रसगुणान् भिषक्। विद्याद् द्रव्यगुणान् कर्तुरभिप्रायाः पृथग्विधाः" ( च. सू. अ. २६ ) इति। विपाकस्यापि द्रव्याश्रयत्वेन द्रव्यप्राधान्यमाह—द्रव्ये द्रव्याणीत्यादि। द्रव्ये आहाररूपे; द्रव्याणीति आहारगतानि पृथिव्यादीनि पच्यन्ते; न रसा इति रसानां परतन्त्रत्वेन स्वतन्त्र-

१ 'स्वस्वकार्योपदर्शनम्' इति मु.।

पाकाविषयत्वात्; द्रव्ये त्वग्निसंयोगात् पच्यमाने पाकाज्ज्ञायमानतया रसः पच्यत इति व्यपदिश्यत इत्यर्थः। यदा 'द्रव्यं द्रव्येण पच्यते' इति पाठस्तदा द्रव्येणेति जठराग्निना, इति विशेषः। यत्तु पठ्यते 'द्रव्ये द्रव्याणि यस्माद्धि विपच्यन्ते न षड्रसाः' इति, यतो न सर्वत्र द्रव्येषु षड्रसाः पच्यन्ते, येनैकरसं द्रव्यं क्षीरादि, मातुलुङ्गादि मधुराम्लं द्विरसं, त्रिरसं न्यग्रोधफलादि "कषायमधुराम्लानि न्यग्रोधादिफलानि च" ( सू. अ. ४६ ) इति वचनात्, चतूरसं तिलादि, पञ्चरसं आमलकादि, षड्रसं त्विह द्रव्यं न; हारीते तु एणमांसं षड्रसमुक्तं, यथा—"एणमांसं लघु स्वादु षड्रसं कटु पच्यते" इत्यादि; एतच्च प्रकृतार्थासंगतार्थत्वान्न मनोहारि। प्रकरणव्युत्पादितं द्रव्यप्राधान्यं निगमयति–द्रव्यं श्रेष्ठतममिति। शेषा भावा इति रसवीर्यविपाकाः ॥ १५–१७ ॥

**अमीमांस्यान्यचिन्त्यानि प्रसिद्धानि स्वभावतः ॥**
**आगमेनोपयोज्यानि भेषजानि विचक्षणैः ॥ १९ ॥**

**प्रत्यक्षलक्षणफलाः प्रसिद्धाश्च स्वभावतः ॥**
**नौषधीर्हेतुभिर्विद्वान् परीक्षेत कदाचन[1] ॥ २० ॥**

**सहस्रेणापि हेतूनां नाम्बष्ठादिर्विरेचयेत् ॥**
**तस्मात्तिष्ठेत्तु मतिमानागमे न तु हेतुषु ॥ २१ ॥**

**इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने द्रव्यगुणरसवीर्यविपाकविज्ञानीयो नाम चत्वारिंशत्तमोऽध्यायः ॥ ४० ॥**

इदानीं द्रव्यादिविषये परीक्षारूपमीमांसाया दर्शितत्वादचिन्त्यद्रव्यस्वभावेऽपि मीमांसा वो मा भूदित्याह—अमीमांस्यानीत्यादि। अचिन्त्यानि यानि भेषजानि यथा दन्ती चित्रकसमाऽपि विरेचयति, यथा विषं विषं हन्ति, लोहाकर्षकमणिर्लोहमाकर्षतीत्याद्युक्तानि आगमावधारितानि मीमांसया अपरीक्ष्याणि; कथं तर्हि तानि ज्ञातव्यानीत्याह—प्रसिद्धानि स्वभावतः। आगमादेव परं प्रसिद्धा भवन्तीत्यर्थः। एतेन यानि चिन्त्यानि भेषजानि तेषां मीमांसा कर्तव्यैव, यदुच्यते—"द्रव्याणां तत्समानानां तत्रावापो न दूष्यति" ( चि. अ. १ ) इति; तथा "स्वयमप्यत्र भिषजा तर्क्यं बुद्धिमता भवेत्" इत्यादिष्वागमविरोधाध्यवसायः। आगमस्यैवात्र बलवत्त्वं दर्शयन्नाह—प्रत्यक्षेत्यादि। प्रत्यक्षेण लक्ष्यते दृश्यते फलं येषां दन्तीविषहरमणिप्रभृतीनां ताः प्रत्यक्षलक्षणफलाः। प्रसिद्धा इत्यागमप्रसिद्धाः। स्वभावत इत्यचिन्त्यस्वरूपतो विरेचकत्वस्तम्भनत्वविषहरत्वादेः। हेतुभिरित्यागमविरुद्धैः कुहेतुभिः, आगमानुगुणैः सद्धेतुभिर्भेषजादीनि सर्वाण्येव परीक्ष्याणि; यदुक्तं **चरके**—"न चैकान्तेन निर्दिष्टेऽप्यत्राभिनिविशेद्बुधः। स्वयमप्यत्र भिषजा तर्क्यं बुद्धिमता भवेत्" ( च. सि. अ. २ ) इत्यादि। इहापि "स्वबुद्ध्या चापि विभजेत् कषायादीनि योगवित्" ( चि. अ. १ ) इत्यादि।

---

१ 'कथञ्चन' इति पा०।

स्वागमस्यानुमानाबाधनीयत्वमेवोदाहरणनिष्ठमाह—सहस्रेणापीत्यादि । सहस्रशब्दो विपुलवचनः । अम्बष्ठादिः संग्राहिकत्वेन प्रागुक्तो गणः । अत्र 'अम्बष्ठादिर्विरेचयति पृथ्वीतोयगुणयुक्तत्वात्, त्रिवृतादिवत्' इत्यादिबहुकुहेतुभिरपि आगमबाधितैर्नाम्बष्ठादिर्विरेचयति, किन्त्वागमोक्तं संग्रहणमेव करोति । उपसंहरति—तस्मादित्यादि । तिष्ठेदिति स्थैर्येण तिष्ठेत् । हेतुष्विति आगमविरुद्धेषु हेतुषु ॥ १९–२० ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यव्याख्यायां भानुमत्यां सूत्रस्थाने द्रव्यरसगुणविपाकविज्ञानीयो नाम चत्वारिंशत्तमोऽध्यायः ॥ ४० ॥

---

## एकचत्वारिंशत्तमोऽध्यायः ।

**अथातो द्रव्यविशेषविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

पूर्वाध्यायोक्तद्रव्यस्य तत्रानुक्तविशेषविज्ञानार्थं तथा तदधिकारेण च वीर्यविपाकयोर्ज्ञानार्थं द्रव्यविशेषविज्ञानीयोऽभिधीयते । द्रव्यस्य पाञ्चभौतिककार्यद्रव्यस्य पार्थिवत्वादय इह विशेषा विवक्षिताः ॥ १ ॥ २ ॥

**तत्र पृथिव्यप्तेजोवाय्वाकाशानां समुदायाद्द्रव्याभिनिर्वृत्तिः, उत्कर्षस्त्वभिव्यञ्जको भवति—इदं पार्थिवमिदमाप्यमिदं तैजसमिदं वायव्यमिदमाकाशीयमिति ॥ ३ ॥**

सर्वकार्यद्रव्याणां पञ्चभूतारब्धत्वं दर्शयित्वा चिकित्सोपयुक्तं पार्थिवत्वादिविशेषमाह—तत्र पृथिव्यप्तेज इत्यादि । समुदायादिति मेलकात् । पृथ्वीजलानलादीनां च यद्यपि विरुद्धगुणत्वं, तथाऽप्यदृष्टवशादेकद्रव्यरूपकार्यारम्भकत्वं दृष्टत्वादेव भवति । यथा वातादीनामेकव्याध्यारम्भकत्वं शुक्रशोणितयोर्वा सौम्याग्नेययोर्गर्भजनकत्वं सत्त्वरजस्तमसां वा महदाद्यारम्भकत्वम् । उत्कर्षः प्रत्येकं पृथिव्याद्युत्कर्षः । अभिव्यञ्जक इति पार्थिवत्वाद्यभिव्यञ्जकः । तमेवाह—इदमित्यादि ॥ ३ ॥

**तत्र स्थूलसान्द्रमन्दस्थिरगुरुकठिनं गन्धबहुलमीषत्कषायं प्रायशो मधुरमिति पार्थिवं; तत् स्थैर्यबलगौरवसंघातोपचयकरं विशेषतश्चाधोगतिस्वभावमिति; (॥ १ ॥)**

**शीतस्तिमितस्निग्धमन्दगुरुसरसान्द्रमृदुपिच्छिलं रसबहुलमीषत्कषायाम्ललवणं मधुररसप्रायमाप्यं; तत् स्नेहनप्रह्लादनक्लेदनबन्धनविष्यन्दनकरमिति; (॥ २ ॥)**

---

१ 'गन्धगुणबहुलं' इति ता. । २ 'रसगुणबहुलं' इति ता. । ३ 'ईषदम्लं' इति चक्रसंमतः पाठः ।

**उष्णतीक्ष्णसूक्ष्मरूक्षखरलघुविशदं रूपबहुलमीषदम्ललवणं कटुकरसप्रायं विशेषतश्चोर्ध्वगतिस्वभावमिति तैजसं; तद्दहनपचनतापनप्रकाशनप्रभावर्णकरमिति; ॥ (३) ॥**

**सूक्ष्मरूक्षखरशिशिरलघुविशदं स्पर्शबहुलमीषत्तिक्तं विशेषतः कषायमिति वायवीयं; तद्वैशद्यलाघवग्लपनविरूक्षणविचारणकरमिति; (४)**

**श्लक्ष्णसूक्ष्ममृदुव्यवायिविशदविविक्तमव्यक्तरसं शब्दबहुलमाकाशीयं; तन्मार्दवशौषिर्यलाघवकरमिति ॥ ४ ॥**

पार्थिवद्रव्यमेव गुणेन कर्मणा च निर्दिशन्नाह—तत्र स्थूलेत्यादि। स्थूलं सूक्ष्मविपरीतं, सान्द्रं तनुविपरीतं, सरविपर्ययं स्थिरं, कठिनं निबिडावयवम्। अत्र गुणे गन्धबहुलमितिवचनात् पृथिव्याः सांसिद्धिकेन गन्धबाहुल्येन योगं दर्शयति। एवं जलादिष्वपि सांसिद्धिकेन रसादिविशेषेण योगं दर्शयन् बहुलशब्दं करिष्यति। ईषत्कषायमिति पृथिव्यनिलयोगाज्ज्ञेयं; यद् वक्ष्यति—"पृथिव्यनिलगुणबाहुल्यात् कषायः" (सू. अ. ४२) इति। प्रायशो मधुरमिति मधुरप्रधानं, पृथिव्या मधुररसकारणत्वात्। स्थैर्यम् अचलत्वं; संघातः काठिन्यम्; उपचयो बृहत्त्वम्। अधोगतिस्वभावं पृथिव्या गौरवेण। आप्यद्रव्ये स्तिमितमिति जडत्वकारकं, सरमिति अनुलोमनम्। ईषदम्लमिति अग्न्यनुप्रवेशाज्जले मनागम्लता, तोया(येना)ग्निबाहुल्याद् दह्यत इति वचनात्। मधुरप्रायं तु पृथ्वीवदपामपि मधुरकारणत्वात्। प्रह्लादनं मनःप्रियत्वं, क्लेदनम् आर्द्रभावः, विष्यन्दनं द्रवस्रुतिः। तैजसद्रव्ये सूक्ष्मं सूक्ष्मस्रोतोऽनुसारि; विशदं पिच्छिलविपरीतम्। ईषदम्ललवणमिति एतद्रसद्वयस्यापि वह्निगुणव्यापारेणारम्भात्; ऊर्ध्वगतिस्वभावमिति अग्नेरूर्ध्वज्वलनात्मकत्वात्। दहनं दाहकरं, पचनं तावद् विक्लेदादिकरणं, तापनं ताप्योपतापजननं, प्रकाशनम् अभिव्यञ्जनं तमसि, प्रभा दीप्तिः, वर्णो गौरादिः। वायवीयद्रव्यलक्षणे खरं श्लक्ष्णविपरीतं, शिशिरं शीतम्; ईषत्तिक्तं वायोरपि तिक्ते व्यापारात्। ग्लपनं हर्षक्षयकरम्, अवृष्यमिति यावत्; विचारणं मनसोऽनेकविकल्पकरं, विवरितमिति पाठपक्षे विवरणं विविधा गतिः। आकाशीयद्रव्ये श्लक्ष्णं मसृणं, व्यवायीति देहव्यापकम्, अव्यक्तरसमिति आकाशस्याव्यक्तरसताहेतुत्वात्। शौषिर्यं शुषिरयुक्तता ॥ ४ ॥

**अनेन निदर्शनेन नानौषधभूतं जगति किंचिद्द्रव्यमस्तीति कृत्वा तं तं युक्तिविशेषमर्थं चाभिसमीक्ष्य स्ववीर्यगुणयुक्तानि द्रव्याणि कार्मुकाणि भवन्ति। तानि यदा कुर्वन्ति स कालः, यत् कुर्वन्ति तत् कर्म, येन कुर्वन्ति तद्वीर्यं, यत्र कुर्वन्ति तदधिकरणं, यथा कुर्वन्ति स उपायः, यन्निष्पादयन्ति तत् फलमिति ॥ ५ ॥**

एवं तदुक्तपार्थिवादिद्रव्यस्वरूपस्य सर्वस्थावरजङ्गमस्य भेषजताप्रतिपत्तिफलं यथा

---

१ 'रूपगुणबहुलं' इति ता.। २ 'स्पर्शगुणबहुलं' इति ता.। ३ 'शब्दगुणबहुलं' इति ता.।

